# संस्कृत-वार्ता:

दिनाङ्क: 06-12-2020

प्रात: - 06: 55

मुख्य-वार्ता:

- केन्द्र प्रशासनं कृषक। षष्ठसंपन्ना :स्तरीया वार्ता ह्य-संघटनानि च अन्तरा पञ्चम्- स्तरीया वार्ता बुधवासरे भविष्यति।
- प्रधानमंत्री नरेन्द्र मोदी आगामिति।पयिष्य आधारशिलां संस्था संसद्भवनस्यवितस्य प्रस्ताातारिकायां दिल्ल्यां-दश-
- कोविड नाइन्टीन इति वैश्विक संक्रमणं विरुध्य भारतीय: संघर्ष: प्रवर्धतेतराम्। प्रत्यवाप्तिमिति: शून्यं द्वे दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता।
- प्रधानमंत्री श्रीमोदी श्व :सार्ध दृश्यमेट्रोनिर्माणकार्यस्य-एकादशवादने आगरा-–श्रव्यप्रणाल्या शुभारंभ विधास्यति।
- अपि च,
- अद्य भारतम् ऑस्ट्रेलियादलं च अंतरा विंशति प्रतिविंशति स्पर्धामालिकाया द्वितीय :स्पर्धा सिडनी क्रीडांगणे क्रीडयिष्यते।

कोविड ओपनिंग

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

गवर्नमेंट फार्मर्स

केन्द्र प्रशासनं कृषक-संघटनानि च अन्तरा पञ्चम्-स्तरीया वार्ता ह्य: संपन्ना। षष्ठ स्तरीया वार्ता बुधवासरे भविष्यति। पञ्चम-स्तरीया वार्ता ह्य: दिल्ल्यां विज्ञानभवने जाता। सम्मेलनानन्तरं केन्द्रीय-कृषिमंत्री नरेन्द्र सिंह तोमरो वार्ताहर सम्मेलने न्यगादीत् यत् न्यूनतम-समर्थनमूल्यं तथैव स्थास्यते । स: विश्वासान्वितो दृश्यते यत् कृषका: सकारात्मका: सन् स्वीयान्दोलनं समाप्स्यन्ति इति। कृषक-कल्याणाय प्रशासनीयां प्रतिबद्धतां पुन: स्मारयता केन्द्रीयो कृषि मन्त्री समुदीरयत् यत् तेन कृषक-प्रतिनिधय: प्रार्थिता: यत् ते तान् बिन्दून् उल्लेखयन्तु येषु कृषक-प्रति-निधय: विवादास्पदत्वेन प्रख्यापयन्ति। तेन सबलं प्रतिपादितं यत् न्यूनतम-समर्थन-मूल्य-व्यवस्था यथावस्थमेव प्रवर्तिता-स्थास्यति। अत: कृषका: न खलु कथंकारमपि विषयेऽस्मिन् चिन्तां आपादयन्तु। अवधेयास्पदं वर्तते यत् कृषक-प्रतिनिधय: अभिनव-कृषि-कृषक-विधिषु प्रश्नान् समुत्थापयन्त: सन्ति। प्रशासनस्य प्रतिनिधिभि: तानि सांवैधानिक-प्रावधानानि उद्बोधितानि यान्यालक्ष्य केन्द्रप्रशासनं इमा: एतान् विधीन् विनिर्मितवत्। कृषि मन्त्रिणा नरेन्द्रसिंह तोमरेण कृषका: समाश्वासिता: यत् प्रशासनं सर्वदा सर्वथा च तदीयां समस्यां समाधातुं तद्-वार्ता: श्रोतुं सन्नद्धम् वर्तते। अवधेयास्पदं वर्तते यत् चतुर्थचरणात्मिका वार्ता अस्य मासस्य चतुर्थे दिवसे सौहार्दपूर्ण वातावरणे सम्पन्नतां गता आसीत्। यस्यां नरेनद्र सिंह तोमर-पीयूष-गोयल-सोम-प्रकाश-सदृशा: केन्द्रीय मन्त्रिण: भागम् अभजन्त।

प्रधानमन्त्री-संसद भवन

प्रधानमंत्री नरेन्द्र मोदी आगामि-दश-तारिकायां दिल्ल्यां प्रस्तावितस्य संसद्भवनस्य आधारशिलां संस्थापयिष्यति। लोकसभाध्यक्ष: ओम बिरला: दिल्ल्यां वार्ताहरसम्मेलने प्रावोचत् यत् भवनस्य निर्माणम् आगामि-शतं वर्षाणाम् आवश्यकता: निधाय क्रियते। तेनोक्तं नवीनसंसद्भवनस्य निर्माणे एकसप्तति-उत्तर-नवशतं कोटिरुप्यकाणां व्ययो भविष्यति।

कोविड

कोविड नाइन्टीन इति वैश्विक संक्रमणं विरुध्य भारतीय: संघर्ष: प्रवर्धतेतराम्। देशे अनारतं प्रत्यवाप्तमितौ परिष्कारो जाजायते। अपरत: सक्रिय प्रकरणेष्वपि अपचिति: जाजायमाना वर्तते। देशे सक्रिय प्रकरणानि पश्यामश्चेत्-नवाशीत्यधिक-षड् शताधिक नव सहस्राधिक चतुर्लक्ष-संख्याकानि प्रकरणानि वर्तन्ते। कोरोना संक्रमण प्रतिरोधी वीराणां प्रयासेन प्रत्यवाप्तिमिति: शून्यं द्वे दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता। प्राय: नवति लक्षाधिका: स्वस्थीभूता:। विगते अहोरात्रे द्वादशाधिक-पञ्च शतं जना: कालकवलिता: सूच्यन्ते। दिल्ल्यां -द्वयशीति: अपि च पश्चिम-बंगाल राज्ये ऊनपञ्चाशत् जनानां प्राणवियोगी जात: इति।

प्रधानमंत्री आगरा मेट्रो

प्रधानमंत्री श्रीमोदी सार्ध-एकादशवादने आगरा-मेट्रोनिर्माणकार्यस्य श्व: दृश्य–श्रव्यप्रणाल्या शुभारंभ विधास्यति। आगरा-मेट्रो त्रिंशत् किलोमीटर परिमितं क्षेत्रं योजयति अपि च अनेन सर्वाणि मुख्य पर्यटनस्थलानि युक्तानि भवन्ति।

तमिलनाडु-केंद्रीयदलम्

अंतर्मंत्रालयीय- केंद्रीयदलस्य सदस्या: तमिलनाडौ पुडुचेर्यां च निवाराख्य- चक्रवातेन जातस्य हाने: निरीक्षणं अद्य करिष्यन्ति। अष्टसदस्यात्मक –दलस्य नेतृत्वं गृहमंत्रालयस्य सहसचिव: आशुतोष: अग्निहोत्री करोति।

डा. भीमराव-अम्बेडकर:

अद्य देश: भारतरत्नं डॉ. भीमराव-अम्बेडकरं तस्य चतुष्षष्टि तमे महानिर्वाणदिवसे स्मरति। आभारते नैकेषां कार्यक्रमाणाम् आयोजनं विधीयते। डॉ. भीमराव अम्बेडकरस्य भारतीय-संविधाननिर्माणे महद्योगदानं विद्यते।

भारत-ऑस्ट्रेलिया

अद्य भारतम् ऑस्ट्रेलियादलं च अंतरा विंशंति प्रतिविंशति स्पर्धामालिकाया: द्वितीय स्पर्धा सिडनी क्रीडांगणे क्रीडयिष्यते। क्रीडाप्रारंभ: भारतीयसमयानुसारि अपराह्ले चत्वारिंशदधिक-एकवादने भविष्यति। अवधेयास्पदमस्ति यत् भारतेन प्रथमस्पर्धायाम् ऑस्ट्रेलियादलम् एकादशधावनांकै: पराभूतम्।

।। इति वार्ता: ।।